अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥
सनात्सनातनतमः
कपिलः कपिरव्ययः ॥
स्वस्तिदः स्वस्तिकृत्स्वस्ति
स्वस्तिभुक् स्वस्तिदक्षिणः ॥ ९६ ॥
अरौद्रः कुंडली चक्री विक्रम्यूर्जितशासनः ॥
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ॥
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः॥९८॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ॥
वीरहा रक्षणः संतो जीवनः पर्यवस्थितः ॥९९
अनंतरूपोऽनंतश्रीर्जितमन्युर्भयापहः ॥
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः
अनादिर्भूर्भुवोलक्ष्मीः सुवीरो रुचिरांगदः ॥
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥१
आधारनिलयो धाता पुष्पहासः प्रजागरः ॥
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥२
प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ॥

तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ३
भूर्भुवःस्वस्तरुस्तारः सपिता प्रपितामहः ॥
यज्ञो यज्ञपतिर्यज्वा यज्ञांगो यज्ञवाहनः ॥४॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥
यज्ञांतकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ५ ॥
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ॥
देवकीनंदनः स्रष्टा क्षितीशः पापनाशनः ॥६॥
शंखभृन्नंदकीचक्री शार्ङ्गधन्वा गदाधरः ॥
रथांगपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥१०७॥

सर्वप्रहरणायुध ओंनम इति ॥
इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥
नाशुभं प्राप्नुयात् किंचित्सोऽमुत्रेह च मानवः
वेदांतगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत्
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम्

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri



भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥५॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ॥
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विंदति ॥
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥७॥
मुच्येत रोगाद्रोगार्तो बद्धो मुच्येत बंधनात् ॥
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ॥

स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥९॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ॥
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् १०
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥११॥
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥
युज्येतात्मा सुखक्षांतिश्रीधृतिस्मृतिकीर्तिभिः
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः
भक्तानां कृतपुण्यानां प्रभवेत्पुरुषोत्तमे ॥१३॥

द्यौः सचंद्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥
वासुदेवस्य वीर्येण विधृतानि महात्मनः॥१४॥
ससुरासुरगंधर्वं सयक्षोरगराक्षसम् ॥
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१५॥
इंद्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च १६
सर्वागमानामाचारः प्रथमं परिकल्पते ॥
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥१७
ऋषयः पितरो देवा महाभूतानि धातवः ॥

जंगमाजंगमं चेदं जगन्नारायणोद्भवम् ॥१८॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥
त्रीन् लोकान् व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः।
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्॥
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च २१
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ॥
भजंति ये पुष्कराक्षं न ते यांति पराभवम् २२

अर्जुन उवाच ॥

पद्मपत्रविशालाक्ष पद्मनाभसुरोत्तम ॥
भक्तानामनुरक्तानां त्राता भव जनार्दन॥२३॥

श्रीभगवानुवाच ॥

यो मां नामसहस्रेण स्तोतुमिच्छति पांडव ॥
तेन चैकेन श्लोकेन स्तुत एव न संशयः॥२४॥

नमोऽस्त्वनंताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ॥

सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥ २५ ॥
नमः कमलनाभाय नमस्ते जलशायिने ॥
नमस्ते केशवानंत वासुदेव नमोऽस्तु ते॥२६॥
वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ॥
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते २७
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥
जगद्धिताय कृष्णाय गोविंदाय नमो नमः२८
आकाशात्पतितं तोयं यथा गच्छति सागरम्॥

सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥२९॥
एष निष्कंटकः पंथा यत्र संपूज्यते हरिः ॥
कुपथं तं विजानीयाद्गोविंदरहितागमम् ॥३०
सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥
तत्फलं समवाप्नोति स्तुत्वा देवं जनार्दनम् ॥
यो नरः पठते नित्यं त्रिकालं केशवालये ॥
द्विकालमेककालं वा क्रूरं सर्वं व्यपोहति ३२
दह्यंते रिपवस्तस्य सौम्याः सर्वे सदा ग्रहाः ॥
विलीयंते च पापानि स्तवे ह्यस्मिन् प्रकीर्तिते

येन ध्यातः श्रुतो येन येनायं पठ्यते स्तवः ॥
दत्तानि सर्वदानानि सुराः सर्वे समर्चिताः ॥
इह लोके परे वापि न भयं विद्यते क्वचित् ३४
नाम्नां सहस्रं योऽधीते द्वादश्यां मम सन्निधौ ॥
शनैर्दहति पापानि कल्पकोटिशतानि च ३५
अश्वत्थसन्निधौ पार्थ तुलसीसन्निधौ तथा ॥
पठेन्नामसहस्रं तु गवांकोटिफलं लभेत् ॥ ३६ ॥
शिवालये पठेन्नित्यं तुलसीवनसंस्थितः ॥
नरो मुक्तिमवाप्नोति चक्रपाणेर्वचो यथा ॥

ब्रह्महत्यादिकं घोरं सर्वपापं विनश्यति ॥३७॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यामानुशासनिके पर्वणि दानधर्मे भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं संपूर्णम् ॥

श्रीकृष्णार्पणमस्तु ॥

इति विष्णुसहस्रनाम समाप्तम् ॥

श्रीगणेशाय नमः ॥ श्रीगोपालकृष्णाय नमः ॥

जनमेजय उवाच ॥

शरतल्पे शयानस्तु भारतानां पितामहः ॥
कथमुत्सृष्टवान् देहं कं च योगमधारयत् ॥ १ ॥

वैशंपायन उवाच ॥

शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः ॥
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ २ ॥
निवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे ॥
समावेशयदात्मानमात्मन्येव समाहितः ॥ ३ ॥

शुक्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥
प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे ॥४॥
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ॥
शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ५
व्यासेन वेदविदुषा नारदेन सुरर्षिणा ॥
देवरातेन वात्स्येन तथा तेन सुमंतुना ॥ ६ ॥
तथा जैमिनिना चैव पैलेन च महात्मना ॥
शांडिल्यदेवलाभ्यां च मैत्रेयेण च धीमता ७
असितेन वसिष्ठेन कौशिकेन महात्मना ॥

हारीतरोमशाभ्यां च तथात्रेयेण धीमता॥८॥
बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः ॥
सनत्कुमारकपिलौ वाल्मीकिस्तुंबुरुः कुरुः९
मौद्गल्यो भार्गवो रामस्तृणबिंदुर्महामुनिः ॥
पिप्पलादश्च वायुश्च संवर्तः पुलहः कचः १०
कश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः ॥
मरीचिरंगिराः कण्वो गौतमो गालवो मुनिः॥
धौम्यो विभांडो मांडव्यो धौम्रः कृष्णोनुभौतिकः॥
उलूकः परमो विप्रो मार्कंडेयो महामुनिः१२

भास्करः पूरणः कृष्णः सूतः परमधार्मिकः ॥
शैब्येन याज्ञवल्क्येन शंखेन लिखितेन च १३
एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ॥
श्रद्धादमपुरस्कारैर्वृतश्चंद्र इव ग्रहैः ॥ १४ ॥
भीष्मस्तु पुरुषव्याघ्र कर्मणा मनसा गिरा ॥
शरतल्पगतः कृष्णं प्रदध्यौ प्रांजलिः शुचिः॥
स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ॥
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्प्रभुम् ॥
कृतांजलिः शुचिर्भूत्वा वाग्विदांप्रवरः प्रभुः॥

भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् १७



भीष्म उवाच ॥

आरिराधयिषुः कृष्णं वाचं जिगदिषाम्यहम् ॥
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः १८
शुचिं शुचिपदं हंसं तत्पदं परमेष्ठिनम् ॥
युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिम्
अनाद्यं तत् परं ब्रह्म न देवा नर्षयो विदुः ॥
एकोऽयं भगवान् देवो धाता नारायणो हरिः
नारायणादृषिगणास्तथा सिद्धमहोरगाः ॥

१६

देवा देवर्षयश्चैव तं विदुः परमव्ययम् ॥ २१ ॥
देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥
यं न जानंति को ह्येष कुतो वा भगवानिति॥
यस्मिन्विश्वानि भूतानि तिष्ठंति च विशंति च
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥२३॥
यस्मिन्नित्ये तते तंतौ दृढे स्रगिव तिष्ठति ॥
सदसद्ग्रथितं विश्वं विश्वांगे विश्वकर्मणि॥२४॥
हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ॥
सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलम् ॥

प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ॥२५॥
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ॥
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥२६॥
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ॥
गृणंति सर्वकर्माणं सत्यं सत्येषु सामसु॥२७॥
चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वतांपतिम् ॥
यं दिव्यैर्देवमर्चंति गुह्यैः परमनामभिः॥२८॥
यस्मिन्नित्यं तपस्तप्तं यदंगेष्वनुतिष्ठति ॥
सर्वात्मा सर्ववित्सर्वः सर्वगः सर्वभावनः २९

यं देवं देवकी देवी वसुदेवादजीजनत् ॥
भूमेश्च ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ३०
यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ॥
इष्ट्वाऽऽनंत्याय गोविंदं पश्यत्यात्मानमात्मनि॥
अतिवाय्विंद्रकर्माणमतिसूर्याग्नितेजसम् ॥
अतिबुद्धींद्रियात्मानं तं प्रपद्ये प्रजापतिम्३२
पुराणे पुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु ॥
क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥३३॥
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ॥

नान्यं भक्ताः क्रियावंतो यजंते सर्वकामदम्॥
यं प्राहुर्जगतः कोशं यस्मिन्सन्निहिताः प्रजाः॥
यस्मिन् लोकाः स्फुरंतीमे जले शकुनयो यथा।
ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ॥
अनादिमध्यपर्यंतं न देवा नर्षयो विदुः॥३६॥
यं सुरासुरगंधर्वाः ससिद्धर्षिमहोरगाः ॥
प्रयता नित्यमर्चंति परमं दुःखभेषजम् ॥
अनादिनिधनं देवमात्मयोनिं सनातनम् ॥
अवितर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् ३८

यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ॥
वदंति जगतोऽध्यक्षमक्षरं परमं पदम् ॥३९॥
हिरण्यवर्णो यो गर्भो दितेर्दैत्यनिषूदनः ॥
एको द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः४०
शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृतेन यः ॥
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः
हुताशनमुखैर्देवैर्धार्यते सकलं जगत् ॥
हविःप्रथमभोक्ता यस्तस्मै होत्रात्मने नमः४२
महतस्तमसः पारे पुरुषं ह्यतितेजसम् ॥

यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः॥
यं बृहंतं बृहत्युक्थं यमग्नौ यं महाध्वरे ॥
यं विप्रसंघा गायंति तस्मै वेदात्मने नमः४४
ऋग्यजुःसामाथर्वाणं दशार्धं हविरात्मकम् ॥
यं सप्ततंतुं तन्वंति तस्मै यज्ञात्मने नमः ४५
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च ॥
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः४६
यः सुपर्णो यजुर्नाम छंदोगात्रस्त्रिवृच्छिराः ॥
रथंतरं बृहत्साम तस्मै स्तोत्रात्मने नमः ४७

य: सहस्रसमे सत्रे यज्ञो विश्वसृजामृषि: ॥
हिरण्यपक्ष: शकुनिस्तस्मै तार्क्ष्यात्मने नम: ॥
पदांगसंधिपर्वाणं स्वरव्यंजनभूषणम् ॥
यमाहुश्चाक्षरं नित्यं तस्मै वागात्मने नम: ४९
यज्ञांगो यो वराहो वै भूत्वा गामुज्जहार ह ॥
लोकत्रयहितार्थाय तस्मै वीर्यात्मने नम: ५०
य: शेते योगमास्थाय पर्यंके नागभूषिते ॥
फणासहस्रराचिते तस्मै निद्रात्मने नम: ॥५१॥
यश्चिनोति सतां सेतुमृतेनामृतयोनिना ॥

धर्मार्थं व्यवहारार्थं तस्मै सत्यात्मने नमः ५२

यं पुनर्धर्मचरणाः पृथग्धर्मफलैषिणः ॥

पृथग्धर्मैः समर्चंति तस्मै धर्मात्मने नमः ५३

यतः सर्वे प्रसूयंते ह्यनंगाच्चैव देहिनः ॥

उन्मादः सर्वभूतानां तस्मै कामात्मने नमः ॥

यत्तद्व्यक्तस्थमव्यक्तं विचिन्वंति महर्षयः ॥

क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ५५

यं त्रिधात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ॥

प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ॥

यं विनिद्रा जितश्वासाः शांता दांता जितेंद्रियाः
ज्योतिः पश्यंति युंजानास्तस्मै योगात्मने नमः
अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ॥
शांताः संन्यासिनो यांति तस्मै मोक्षात्मने नमः
योऽसौ युगसहस्रांते प्रदीप्तार्चिर्विभावसुः ॥
संक्षोभयति भूतानि तस्मै घोरात्मने नमः ५९
संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ॥
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥
अजस्य नाभ्यां संभूतं यस्मिन्विश्वं प्रतिष्ठितम्

पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ६१
सहस्रशिरसे चैव पुरुषायामितात्मने ॥
चतुःसमुद्रपर्यंके योगनिद्रात्मने नमः ॥६२॥
यस्य केशेषु जीमूता नद्यः सर्वांगसंधिषु ॥
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ६३
यस्मात्सर्वाः प्रसूयंते सर्गप्रलयविक्रियाः ॥
यस्मिंश्चैव प्रलीयंते तस्मै हेत्वात्मने नमः६४
यो निषण्णो भवेद्रात्रौ दिवा भवति धिष्ठितः॥
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ६५

अकुंठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ॥



वैकुंठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ६६

विभज्य पंचधात्मानं वायुभूतः शरीरगः ॥

यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ॥

ब्रह्मवक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः ॥

पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः

युगेष्वावर्तमानेषु मासर्त्वयनहायनैः ॥

सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ६९

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः॥

सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥
परः कालात् परो यज्ञात्परात्परतरो हि यः ॥
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥
विषये वर्तमानो यस्तं वैशेषिकनिर्गुणैः ॥
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ७२
अन्नपानेंधनमयो रसप्राणविवर्धनः ॥
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥
पिंगेक्षणसटं यस्य रूपं दंष्ट्रनखायुधम् ॥
दानवेंद्रांतकरणं तस्मै दृप्तात्मने नमः ॥७४॥

रसातलगतः श्रीमाननंतो भगवान्विभुः ॥





जगद्धारयते कृत्स्नं तस्मै वीर्यात्मने नमः ७५

यो मोहयति भूतानि स्नेहपाशानुबंधनैः ॥

सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ७६

भूतलातलमध्यस्थो हत्वा तु मधुकैटभौ ॥

उद्धृता येन वै वेदास्तस्मै मत्स्यात्मने नमः ७७

ससागरवनां बिभ्रत्सप्तद्वीपां वसुंधराम् ॥

यो धारयति पृष्ठेन तस्मै कूर्मात्मने नमः ७८



एकार्णवे हि मग्नां गां वाराहं रूपमास्थितः ॥

उद्दधार महीं योऽसौ तस्मै क्रोडात्मने नमः ॥
नारसिंहं वपुः कृत्वा यस्त्रैलोक्यभयंकरम् ॥
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः८०
वामनं रूपमास्थाय बलिं संयम्य मायया ॥
इमे क्रांतास्त्रयो लोकास्तस्मै क्रांतात्मने नमः
जमदग्निसुतो भूत्वा रामः परशुधृग् विभुः ॥
सहस्रार्जुनहंतैव तस्मा उग्रात्मने नमः ॥८२॥
रामो दाशरथिर्भूत्वा पौलस्त्यकुलनंदनम् ॥
जघान रावणं संख्ये तस्मै क्षत्रात्मने नमः८३

वसुदेवसुतः श्रीमान्वासुदेवो जगत्पतिः ॥

जहार वसुधाभारं तस्मै कृष्णात्मने नमः ८४
बुद्धरूपं समास्थाय सर्वरूपपरायणः ॥
मोहयन्सर्वभूतानि तस्मै बुद्धात्मने नमः ८५
हनिष्यति कलेरंते म्लेच्छांस्तुरगवाहनः ॥
धर्मसंस्थापनार्थाय तस्मै कल्क्यात्मने नमः ॥
आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पंचस्ववस्थितः ॥
यं ज्ञानेनाधिगच्छंति तस्मै ज्ञानात्मने नमः ॥
अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ॥

अपारपारिमेयाय तस्मै दिव्यात्मने नमः ८८
जटिने दंडिने नित्यं लंबोदरशरीरिणे ॥
कमंडलुनिषंगाय तस्मै ब्रह्मात्मने नमः ॥८९॥
शूलिने त्रिदशेशाय त्र्यंबकाय महात्मने ॥
भस्मदिग्धोर्ध्वलिंगाय तस्मै रुद्रात्मने नमः॥
चंद्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने ॥
पिनाकशूलहस्ताय तस्मा उग्रात्मने नमः ९१
पंचभूतात्मभूताय भूतादिनिधनाय च ॥
अक्रोधद्रोहमोहाय तस्मै शांतात्मने नमः९२

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः॥

यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः॥९३॥
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मा विश्वसंभवः॥
अपवर्गस्थभूतानां पंचानां परतः स्थितः॥९४॥
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु॥
नमस्ते त्रिषु सर्वेषु त्वं हि सर्वमयो निधिः९५
नमस्ते भगवन्विष्णो लोकानां प्रभवाप्यय॥
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः९६
तेन पश्यामि भगवन् दिव्येषु त्रिषु वर्त्मसु॥

तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम्॥९७
द्यौश्च ते शिरसा व्याप्ता पद्भ्यां देवी वसुंधरा॥
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः॥९८
दिशो भुजा रविश्चक्षुर्वीर्यं शुक्रः प्रजापतिः॥
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः॥९९॥
अतसीपुष्पसंकाशं पीतकौशेयवाससम्॥
ये नमस्यंति गोविंदं न तेषां विद्यते भयम्॥
नमो नरकसंत्रासरक्षामंडलकारिणे॥
संसारनिम्नगावर्ततरिकाष्ठाय विष्णवे॥१०१॥

नमो ब्राह्मण्यदेवाय गोब्राह्मणहिताय च ॥





जगद्धिताय कृष्णाय गोविंदाय नमो नमः २

प्राणकांतारपाथेयं संसारच्छेदभेषजम् ॥

दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥ ३ ॥

यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् ॥

यथा विष्णुमयं सर्वं पापं नाशयते तथा॥४॥

त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ॥

यच्छ्रेयः पुंडरीकाक्ष तद्ध्यायस्व सुरेश्वर ॥ ५ ॥

इति विद्यातपोयोनिर् अयोनिर्विष्णुरीडितः ॥

वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ६

नारायणपरं ब्रह्म नारायणपरं तपः ॥

नारायणपरं चेदं सर्वं नारायणात्मकम् ॥७॥

वैशंपायन उवाच ॥

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ॥

नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥८॥

अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः॥

त्रैलोक्यदर्शनज्ञानं दिव्यं दत्त्वा ययौ हरिः ९

तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः ॥

भीष्मं वाग्भिर्बाष्पकंठास्तमानर्चुर्महामतिम्

ते स्तुवंतश्च विप्राग्र्याः केशवं पुरुषोत्तमम् ॥
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ॥

यं योगिनः प्राणवियोगकाले ।
यत्नेन चित्ते विनिवेशयंति ॥
साक्षात्पुरस्ताद्धरिमीक्षमाणः ।
प्राणान् जहौ प्राप्तकालो हि भीष्मः॥१२॥

शुक्लपक्षे दिवा भूमौ गंगायां चोत्तरायणे ॥
धन्यास्तात मरिष्यंति हृदयस्थे जनार्दने॥१३॥

विदित्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः॥
सहसोत्थाय संतुष्टो यानमेवाभ्यपद्यत ॥ १४ ॥
केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः ॥
अपरेण महात्मानौ युधिष्ठिरधनंजयौ ॥१५॥
भीमसेनो यमौ चोभौ रथमेकं समास्थिताः॥
कृपो युयुत्सुः सूतश्च संजयश्चापरं रथम्॥१६॥
ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ॥
नेमिघोषेण महता कंपयंतो वसुंधराम् ॥१७
ततो गिरः पुरुषवरस्तवान्विता

द्विजेरिताः पथि सुमनाः स शुश्रुवे ॥



कृतांजलिं प्रणतमथापरं जनं
स केशिहा मुदितमनाभ्यनंदत ॥ १८ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥
धर्माध्यक्षं स्तुवन्नित्यं सर्वपापैः प्रमुच्यते १९

इमं स्तवं यः पठति शार्ङ्गधन्वनः ।
शृणोति वा भक्तिसमन्वितो जनः ॥
स चक्रधृक् प्रतिहतसर्वकल्मषो
जनार्दनं प्रविशति देहसंक्षये ॥ २० ॥

अशनिशितसुधारं यस्य चक्रं सुचारु
मणिकनकविचित्रे कुंडले यस्य कर्णौ ॥
भ्रमरशतसहस्रैः सेविता यस्य माला
असुरकुलनिहंता प्रीयतां वासुदेवः ॥२१॥
स्तवराजः समाप्तोऽयं विष्णोरद्भुतकर्मणः ॥
गांगेयेन पुरा गीतो महापातकनाशनः॥२२॥

श्रीभगवानुवाच ॥

यः संपठेदिदं स्तोत्रं मम जन्मानुकीर्तनम् ॥
देवलोकमतिक्रम्य तस्य लोको यथा मम ॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शांतिपर्वणि भीष्मयुधिष्ठिरसंवादे भीष्मस्तवराजः समाप्तः ॥



इति भीष्मस्तवराजः समाप्तः ॥

श्रीगणेशाय नमः ॥ श्रीगोपालकृष्णाय नमः ॥

शतानीक उवाच ॥

महामते महाप्राज्ञ सर्वशास्त्रविशारद ॥
अक्षीणकर्मबंधस्तु पुरुषो द्विजसत्तम ॥ १ ॥
सततं किं जपेज्जाप्यं विबुधः किमनुस्मरन् ॥
मरणे यज्जपेज्जाप्यं यं च भावमनुस्मरन् ॥ २ ॥
यं च ध्यात्वा द्विजश्रेष्ठ पुरुषो मृत्युमागतः ॥
परं पदमवाप्नोति तन्मे वद महामुने ॥ ३ ॥

शौनक उवाच ॥



इदमेव महाप्राज्ञ पृष्टवांश्च पितामहम् ॥
भीष्मं धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः॥४॥

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ॥
प्रयाणकाले किं चिंत्यं मुमुक्षोस्तत्त्वचिंतकैः॥
किंनु स्मरन् कुरुश्रेष्ठ मरणे पर्युपस्थिते ॥
प्राप्नुयां परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः॥



भीष्म उवाच ॥

तद्युक्तं स्वहितं सूक्ष्मं प्रश्नमुक्तं त्वयाऽनघ ॥

शृणुष्वावहितो राजन्नारदेन पुरा श्रुतम् ॥७॥
श्रीवत्सांकं जगद्बीजमनंतं लोकसाक्षिणम् ॥
पुरा नारायणं देवं नारदः परिपृष्टवान् ॥८॥

नारद उवाच ॥

त्वमक्षरं परं ब्रह्म निर्गुणं तमसः परम् ॥
आहुर्वेद्यं परंधाम ब्रह्माणं कमलोद्भवम् ॥९॥
भगवन् भूतभव्येश श्रद्दधानैर्जितेंद्रियैः ॥
कथं भक्तैर्विचिंत्योऽसि योगिभिर्मोक्षकांक्षिभिः
किं नु जाप्यं जपेन्नित्यं कल्य उत्थाय मानवः॥

कथं जपेत्सदा ध्यायेद् ब्रूहि तत्त्वं सनातनम्॥



भीष्म उवाच ॥

श्रुत्वा च तस्य देवर्षेर्वाक्यं वाक्यविशारदः ॥
प्रोवाच भगवान्विष्णुर्नारदाय च धीमते १२

श्रीभगवानुवाच ॥

हंत ते कथयिष्यामि इमां दिव्यामनुस्मृतिम्
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ॥१३॥
ॐकारमग्रतः कृत्वा मां नमस्कृत्य नारद ॥
एकाग्रः प्रयतो भूत्वा इमं मंत्रमुदीरयेत् ॥

ॐ नमो भगवते वासुदेवाय इत्ययम् ॥१५॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ॥
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव १६
अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ॥
प्रपद्ये पुंडरीकाक्षं देवं नारायणं हरिम् ॥१७॥
लोकनाथं सहस्राक्षम् अक्षरं परमं पदम् ॥
भगवंतं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् १८
स्रष्टारं सर्वलोकानाम् अनंतं विश्वतोमुखम् ॥
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥१९॥

हिरण्यगर्भममृतं भूगर्भं तमसः परम् ॥



प्रभोः प्रभुमनाद्यं च प्रपद्ये तं रविप्रभम् २०

सहस्रशीर्षकं देवं महर्षैः सत्त्वभावनम् ॥

प्रपद्ये सूक्ष्ममचलं वरेण्यमनघं शुचिम् ॥२१॥

नारायणं पुराणेशं योगावासं सनातनम् ॥

संयोगं सर्वभूतानां प्रपद्ये ध्रुवमीश्वरम् ॥२२॥

क्षराक्षरविसृष्टस्तु प्रोच्यते पुरुषोत्तमः ॥

यः पुरा प्रलये प्राप्ते नष्टे स्थावरजंगमे ॥२३॥

ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥

एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥
यः प्रभुः सर्वलोकाना येन सर्वमिदं ततम् ॥
चराचरगुरुर्देवः स मे विष्णुः प्रसीदतु ॥२५॥
आभूतसंप्लवे चैव प्रलीने प्रकृतौ महान् ॥
योऽवतिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥
येन क्रांतास्त्रयो लोका दानवाश्च वशीकृताः ॥
शरण्यः सर्वलोकानां स मे विष्णुः प्रसीदतु ॥
यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम् ॥
शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥

कार्यं क्रिया च करणं कर्ता हेतुः प्रयोजनम् ॥
अक्रियाकरणे कार्यें स मे विष्णुः प्रसीदतु ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च ॥
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥
शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ॥
रिपुगर्भस्य यो गर्भः स मे विष्णुः प्रसीदतु ॥
अग्निसोमार्कताराणां ब्रह्मरुद्रेंद्रयोगिनाम् ॥
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ॥
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रिया फलम्

गुणाकारः स मे बभ्रुर् वासुदेवः प्रसीदतु ३३
सोमार्काग्निमयं तेजो या च तारामयी द्युतिः॥
दिवि संजायते तेजः स महात्मा प्रसीदतु३४
गुणात्मा निर्गुणश्चान्यो रश्मिवांश्चेतनो ह्यजः॥
सूक्ष्मः सर्वगतो देवः स महात्मा प्रसीदतु ३५
अव्यक्तं सदधिष्ठानम् अचिंत्यं तमसः परम्॥
प्रकृतिः प्रकृतिं भुंक्ते स महात्मा प्रसीदतु३६
क्षेत्रज्ञः पंचधा भुंक्ते प्रकृतिं पंचभिर्मुखैः ॥
महागुणांश्च यो भुंक्ते स महात्मा प्रसीदतु३७

सांख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः ॥

यं विदित्वा विमुच्यंते स महात्मा प्रसीदतु ॥
योगावास नमस्तुभ्यं सर्वावास वरप्रद ॥
हिरण्यगर्भ यज्ञांग पंचगर्भ नमोऽस्तु ते ॥३९॥
चतुर्भूतपरं धाम लक्ष्म्यावास सदाच्युत ॥
शब्दादिवासनान्योऽसि वासुदेव प्रधानकृत्॥
अजः संगमनः पार्थो ह्यमूर्तिर्विश्वमूर्तिधृक् ॥
श्रीः कीर्तिः पंचकालज्ञो नमस्ते ज्ञानसागर ॥
अव्यक्ताद्व्यक्तमुत्पन्नम् अव्यक्ताद्यः परात्परः॥

यस्मात् परतरं नास्ति तमस्मि शरणं गतः ॥
चिंतयंतो ह्यजं नित्यं ब्रह्मेशानादयः सुराः ॥
निश्चयं नाधिगच्छंति तमस्मि शरणं गतः ॥
जितेंद्रिया जितात्मानो ज्ञानध्यानपरायणाः॥
यं प्राप्य न निवर्तंते तमस्मि शरणं गतः ॥
एकांशेन जगत्कृत्स्नमवष्टभ्य स्थितः प्रभुः ॥
अग्राह्यो निर्गुणो नित्यस् तमस्मि शरणं गतः
अतींद्रिय नमस्तुभ्यं लिंगैर्व्यक्तैर्न मीयसे ॥
ये च त्वां नाभिजानंति तमस्मि शरणं गतः ॥

कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः ॥



अनन्यभक्ता जानंति न पुनर्नारकी जनः ॥

एकांतिनो हि निर्द्वंद्वा निराशाः कर्मकारिणः॥

ज्ञानाग्निदग्धकर्माणस् त्वां विशंति मनस्विनः

अशरीरं शरीरस्थं समं सर्वेषु देहिषु ॥

पापपुण्यविनिर्मुक्ता भक्तास्त्वां पर्युपासते ॥

अव्यक्तबुद्ध्यहंकारमनोभूतेंद्रियाणि च ॥

त्वयि तानि न तेषु त्वं तेषु तानि न ते त्वयि॥

एकत्वाय च नानन्यं ये विदुर्यांति ते परम् ॥

समत्वमिह कांक्षेयं भक्त्या वै नान्यचेतसा ॥
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ॥५१॥
त्वयि तंतौ च तत्प्रोतं सूत्रे मणिगणा इव ॥
स्रष्टा भोक्तासि कूटस्थो ह्यचिंत्यः सर्वसंज्ञितः॥
अकर्ता हेतुरहितः पृथगात्मा व्यवस्थितः ॥
न मे भूतेषु संयोगः पुनर्भवतु जन्मनि॥५३॥
अहंकारेण बुद्ध्या वा न मे योगस्त्रिभिर्गुणैः ॥
न मे धर्मो ह्यधर्मो वा नारंभो जन्म वा पुनः॥
जरामरणमोक्षार्थं त्वां प्रपन्नोऽस्मि सर्वगम् ॥

विषयैरिंद्रियैश्चापि न मे भूयः समागमः ५५



ईश्वरोऽसि जगन्नाथ किमतः परमुच्यते ॥

भक्तानां यद्धितं देव तत्ते हि त्रिदशेश्वर ॥५६॥

पृथिवीं यातु मे घ्राणं यातु मे रसनं जलम् ॥

रूपं हुताशने यातु स्पर्शो मे यातु मारुते ५७

श्रोत्रमाकाशमभ्येतु मनो वैकारिकं पुनः ॥

इंद्रियाणि गुणान्यांतु स्वेषु स्वेषु च योनिषु ॥

पृथिवीयातुसलिलम्आपोऽग्निमनलोऽनिलम्

वायुराकाशमभ्येतु मनश्चाकाशमेव च ॥५९॥

अहंकारं मनो यातु मोहनं सर्वदेहिनाम् ॥
अहंकारस्तथा बुद्धिं बुद्धिरव्यक्तमेव च ॥६०॥
प्रधानं प्रकृतिं यातु गुणसाम्ये व्यवस्थिते ॥
विसर्गः सर्वकरणैर् गुणभूतैश्च मे भवेत् ६१
सत्वं रजस्तमश्चैव प्रकृतिं प्रविशंतु मे ॥
नैष्कैवल्यपदं देव कांक्षेऽहं ते परंतप ॥६२॥
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत् पुनः
नमो भगवते तस्मै विष्णवे प्रभविष्णवे॥६३॥
त्वद्बुद्धिस्त्वद्गतप्राणस् त्वद्भक्तस्त्वत्परायणः ॥

त्वामेवाहं स्मरिष्यामि मरणे पर्यवस्थिते ६४



पूर्वदेहे कृता ये मे व्याधयः प्रविशंतु माम् ॥
अर्दयंतु च मां दुःखान्यृणं मे प्रतिमुच्यताम् ॥
अनुध्येयोऽसि मे देव न मे जन्म भवेत्पुनः ॥
अस्माद्ब्रवीमि कर्माणि ऋणं मे न भवेदिति ॥
उपतिष्ठंतु मां सर्वे व्याधयः पूर्वसंचिताः ॥
अनृणो गंतुमिच्छामि तद्विष्णोः परमं पदम् ॥
अहं भगवतस्तस्य मम वासः सनातनः ॥



तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ६८

कर्मेंद्रियाणि संयम्य पंचभूतेंद्रियाणि च ॥
दशेंद्रियाणि मनसि अहंकारे तथा मनः ६९
अहंकारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ॥
आत्मबुद्धींद्रियं पश्येद्बुद्ध्या बुद्धेः परात्परम् ७०
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ॥
ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ॥ ७१
ममायमिति तस्याहं येन सर्वमिदं ततम् ॥
आत्मन्यात्मनि संयोज्य परात्मानमनुस्मरेत्
नमो भगवते तस्मै देहिनां परमात्मने ॥

नारायणाय भक्ताय एकनिष्ठाय शाश्वते ॥


हृदिस्थाय च भूतानां सर्वेषां च महात्मने ७३
इमामनुस्मृतिं दिव्यां वैष्णवीं पापनाशिनीम्
स्वपन्विबुद्धश्च पठेद् यत्र यत्र समभ्यसेत् ७४
मरणे समनुप्राप्ते यदेकं मामनुस्मरेत् ॥
अपि पापसमाचारः स याति परमां गतिं ७५
यद्यहंकारमाश्रित्य यज्ञदानतपःक्रियाः ॥
कुर्वन् फलमवाप्नोति पुनरावर्तनं च तत् ७६

अभ्यर्चयन् पितॄन् देवान्

पठन् जुह्वन् बलिं ददत् ॥
ज्वलदग्नौ स्मरेद्यो मां
लभते परमां गतिम् ॥ ७७ ॥
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
यज्ञदानतपस्तस्मात्कुर्याद्रागविवर्जितः ७८
पौर्णमास्याममावास्यां द्वादश्यां च तथैव च ॥
श्रावयेच्छ्रद्दधानश्च मद्भक्तश्च विशेषतः॥७९॥
नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ॥
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद८०

किं पुनर्ये भजंते मां साधका विधिपूर्वकम् ॥
श्रद्धावंतो यतात्मानस्ते यांति परमां गतिम् ॥
कर्माण्याद्यंतवंतीह मद्भक्तोऽनंतमश्नुते ॥
मामेव तस्माद्देवर्षे ध्याहि नित्यमतंद्रितः ८२
अज्ञानां चैव यो ज्ञानं दद्याद्धर्मोपदेशतः ॥
कृत्स्नां वा पृथिवींदद्याद् येनतुल्यं नतत्फलम्
तस्मात्प्रदेयं साधुभ्यो जपं बंधभयापहम् ॥
अवाप्स्यति ततः सिद्धिं प्राप्स्यसे च पदं मम॥
अश्वमेधसहस्रैश्च वाजपेयशतैरपि ॥

नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥८५॥

भीष्म उवाच ॥

हरेः पृष्टं पुरा तेन नारदेन सुरर्षिणा ॥
यदुवाच ततः शंभुस् तदुक्तं समनुव्रतः ॥८६॥
त्वमप्येकमना भूत्वा ध्याहि ध्येयं गुणाधिकम् ।
भजस्व सर्वभावेन परमात्मानमव्ययम् ८७
श्रुत्वैवं नारदो वाक्यं दिव्यं नारायणोदितम् ॥
अत्यंतं भक्तिमान् देव एकांतित्वमुपेयिवान् ॥
नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ॥

इमं जपित्वा चाप्नोति तद्विष्णोः परमं पदम् ॥
किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ॥
नमो नारायणायेति मंत्रः सर्वार्थसाधकः ९०
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥
ये नृशंसा दुरात्मानः पापाचाररतास्तथा ॥
तेऽपि यांति परं स्थानं नारायणपरायणाः ९२
अनन्यया मंदबुद्ध्या प्रतिभाति दुरात्मनाम् ॥
कुतर्काज्ञानदृष्टीनां विभ्रांतेंद्रियवर्त्मनाम् ॥

नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम् ॥
अंतकाले जपाद्यांति तद्विष्णोः परमं पदम् ॥

आचारहीनोऽपि मुनिप्रवीर
भक्त्या विहीनोऽपि विनिंदितोऽपि ॥
किं तस्य नारायणशब्दमात्रतो
विमुक्तपापो विशतेऽच्युतां गतिम् ॥९५॥

कांतारवनदुर्गेषु कृच्छ्रेष्वापत्सु संयुगे ॥
दस्युभिः सन्निरुद्धश्च नामभिर्मां प्रकीर्तयेत् ॥
जन्मांतरसहस्रेषु तपोध्यानसमाधिभिः ॥

नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ॥
श्वपचोऽपि नरः कर्तुं क्षमस्तावन्न किल्बिषम् ॥
न तावत्पापमस्तीह यावन्नामाहृतं हरेः ॥
अतिरेकभयादाहुः प्रायश्चित्तांतरं वृथा ॥
गत्वा गत्वा निवर्तंते चंद्रसूर्यादयो ग्रहाः ॥
अद्यापि न निवर्तंते द्वादशाक्षरचिंतकाः ॥
न वासुदेवात्परमस्ति मंगलं
न वासुदेवात्परमस्ति पावनम् ॥

न वासुदेवात्परमस्ति दैवतं
तं वासुदेवं प्रणमन्न सीदति ॥ १०१ ॥
इमां रहस्यां परमामनुस्मृतिं
योऽधीत्य बुद्धिं लभते च नैष्ठिकीम् ।
विहाय पापं विनिमुच्य संकटात्
स वीतरागो विचरेन्महीमिमाम् ॥१०२॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासि-
क्यामानुशासनिके पर्वणि दानधर्मे श्रीविष्णोर्दि-
व्यमनुस्मृतिस्तोत्रं संपूर्णम् ॥ शुभं भवतु ॥

श्रीगणेशाय नमः ॥ श्रीगोपालकृष्णाय नमः॥

शतानीक उवाच ॥

मया हि देवदेवस्य विष्णोरमिततेजसः ॥
श्रुताः संभूतयः सर्वा गदतस्तव सुव्रत ॥ १ ॥
यदि प्रसन्नो भगवान् अनुग्राह्योऽस्मि वा यदि
तदहं श्रोतुमिच्छामि नृणां दुःस्वप्ननाशनम् २
स्वप्नादिषु महाभाग दृश्यंते ये शुभाशुभाः ॥
फलानि च प्रयच्छंति तद्गुणान्येव भार्गव ॥३॥
तादृक् पुण्यं पवित्रं च नृणामतिशुभप्रदम् ॥

दुष्टस्वप्नोपशमनं तन्मे विस्तरतो वद ॥ ४ ॥

शौनक उवाच ॥

इदमेव महाभाग पृष्टवान्स्वपितामहम् ॥
भीष्मं धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥५॥

भीष्म उवाच ॥

आद्यं पुरुषमीशानं पुरुहूतं पुरातनम् ॥
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥
असच्च सच्च यद्विश्वं नित्यं सदसतः परम् ॥
परं पराणां स्रष्टारं पुराणं परमव्ययम् ॥ ७ ॥

मांगल्यं मंगलं विष्णुं वरेण्यमनघं शुचिम् ॥
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ ८ ॥
प्रवक्ष्यामि महापुण्यं कृष्णद्वैपायनस्य च ॥
येनोक्तेन श्रुतेनापि नश्यते सर्वपातकम् ॥९॥
नारायणसमो देवो न भूतो न भविष्यति ॥
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥
किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ॥
नमो नारायणायेति मंत्रः सर्वार्थसाधकः ११

वैशंपायन उवाच ॥



वैशंपायनमासीनं पुराणोक्तिविचक्षणम् ॥
इममर्थं स राजर्षिः पृष्टवान् जनमेजयः॥१२॥

जनमेजय उवाच ॥

किं जपन्मुच्यते पापात् किं जपन्सुखमश्नुते
दुःस्वप्ननाशनं पुण्यं श्रोतुमिच्छामि मानद१३

जज्ञे बहुज्ञं परमत्युदारं
यं द्वीपमध्ये सुतमात्मवंतम् ॥
पराशराद्गंधवती महर्षेस्

तस्मै नमोऽज्ञानतमोनुदाय ॥ १४ ॥
नमो भगवते तस्मै व्यासायामिततेजसे ॥
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥
पुराऽमुमेव ते प्रश्नं पृष्टवान्प्रपितामहः ॥
भीष्मं वै व्रतिनां श्रेष्ठं तं चाहं कथयामि ते ॥
देवव्रतं महाप्राज्ञं सर्वशास्त्रविशारदम् ॥
विनयेनोपसंगम्य पर्यपृच्छद्युधिष्ठिरः ॥ १७ ॥

युधिष्ठिर उवाच ॥

दुःस्वप्नदर्शनं घोरम् अवेक्ष्य भरतर्षभ ॥

प्रयतः किं जपेज्जाप्यं विबुद्धः किमनुस्मरेत्॥
कस्य कुर्यान्नमस्कारं प्रातरुत्थाय मानवः ॥
किं च ध्यायेत सततं किं पूज्यं वा भवेत्सदा॥
पितामह प्रसादेन बुद्धिभेदो भवेन्न मे ॥
तदहं श्रोतुमिच्छामि ब्रूहि नो वदतां वर २०

भीष्म उवाच ॥

शृणु राजन्महाबाहो कथयिष्येह शांतिकम् ॥
दुःस्वप्नदर्शने जाप्यं यद्वा नित्यं समाहितैः२१
अत्राप्युदाहरंतीमम् इतिहासं पुरातनम् ॥

गजेंद्रमोक्षणं पुण्यं कृष्णस्याद्भुतकर्मण: ॥२२

सर्वरत्नमय: श्रीमान् त्रिकूटो नाम पर्वत: ॥
सुत: पर्वतराजस्य सुमेरोर्भास्करद्युते: ॥२३॥

क्षीरोदजलवीच्युग्रैर् धौतामलशिलातल: ॥
उत्थित: सागरं भित्त्वा देवर्षिगणसेवित: ॥२४

अप्सरोभि: परिवृत: श्रीमान् प्रस्रवणाकुल: ॥
गंधर्वै: किन्नरैर्यक्षै: सिद्धचारणपन्नगै: ॥
मृगै: सिंहैर्गजेंद्रैश्च वृतगात्रो विराजते ॥२५॥

पुन्नागै: कर्णिकारैश्च सुबिल्वैर्दिव्यपाटलै: ॥

चूतानिंबकदंबैश्च चंदनागरुचंपकैः ॥
शालैस्तालैस्तमालैश्च तरुभिश्चार्जुनैस्तथा ॥
बकुलैः कुंदपुष्पैश्च सरलैर्देवदारुभिः ॥
मंदारकुसुमैश्चान्यैः पारिजातैश्च सर्वशः २७
एवं बहुविधैर्वृक्षैः सर्वतः समलंकृतः ॥
नानाधात्वंकितैः शृंगैः प्रस्रवद्भिः समंततः२८
शोभितो रुचिरप्रख्यैस् त्रिभिर्विस्तीर्णसानुभिः
मृगैः शाखामृगैः सिंहैर् मातंगैश्च सदामदैः२९
जीवजीवकसंघुष्टं चकोरशिखिनादितम् ॥

तस्यैकं कांचनं शृंगं सेवते यद्दिवाकरः ॥३०॥
नानापुष्पसमाकीर्णं नानाशृंगैः समाकुलम् ॥
द्वितीयं राजतं शृंगं सेवते यन्निशाकरः ॥३१॥
पांडुरांबुदसंकाशं तुषारचयसन्निभम् ॥
वज्रेंद्रनीलवैडूर्यतेजोभिर्भासयन्नभः ॥ ३२ ॥
तृतीयं ब्रह्मसदनं प्रकृष्टं शृंगमुत्तमम् ॥
पद्मरागसमप्रख्यं तारागणसमन्वितम् ॥३३॥
नैतत्कृतघ्नाः पश्यंति न नृशंसा न नास्तिकाः
नातप्ततपसो लोके ये च पापकृतो जनाः ॥

नानाराधितगोविंदाः शैलं पश्यंति मानवाः ॥
तस्य सानुमतः पृष्ठे सरः कांचनपंकजम् ॥
कारंडवसमाकीर्णं राजहंसोपशोभितम् ॥
मत्तभ्रमरसंघुष्टं चकोरशिखिनादितम् ॥३५
कमलोत्पलकह्लारपुंडरीकोपशोभितम् ॥
कुमुदैः शतपत्रैश्च कांचनैः समलंकृतम् ॥ ३६
पद्मैर्मरकतप्रख्यैः पुष्पैः कांचनसन्निभैः ॥
गुल्मैः कीचकवेणूनां समंतात्परिवारितम् ३७
अत्यद्भुतं महास्थानं विचित्रशिखराकुलम् ॥

शतयोजनविस्तीर्णं शतयोजनमायतम् ॥३८
पंचयोजनमूर्धानं सर एतत्प्रमाणतः ॥
हिमखंडोदकं राजन् सुस्वादममृतोपमम् ३९
त्रैलोक्येऽदृष्टपूर्वं च यत्तत्सरमनुत्तमम् ॥
सुप्रसन्नं सरो दिव्यं देवानामपि दुर्लभम् ४०
खातेन द्विगुणं प्रोक्तं शरद्द्यौरिव निर्मलम् ॥
उपहाराय देवानां सिद्धाद्यर्चितपंकजम् ४१
तस्मिन्सरसि दुष्टात्मा विरूपोऽतर्जलाशयः
आसीद्ग्राहो गजेंद्राणां दुराधर्षो महाबलः ४२

अथ दंतोज्वलमुखः कदाचिद्गजयूथपः ॥
आजगाम तृषाक्रांतः करेणुपरिवारितः ॥४३॥
मदस्रावी जलाकांक्षी पादचारीव पर्वतः
वासयन्मदगंधेन महानैरावतोपमः ॥ ४४ ॥
गजो ह्यंजनसंकाशो मदाच्चलितलोचनः ॥
तृषितः पानकामोऽयमवतीर्णश्च तत्सरः ४५
पिबतस्तस्य तत्तोयं ग्राहश्च समपद्यत ॥४६॥
सुलीनः पंकजवने यूथमध्यगतः करी ॥
गृहीतस्तेन रौद्रेण ग्राहेणातिबलीयसा ॥४७॥

पश्यंतीनां करेणूनां क्रोशंतीनां सुदारुणम् ॥
नीयते पंकजवने ग्राहेणाव्यक्तमूर्तिना ॥४८॥
गजो ह्याकर्षते तीरं ग्राहश्चाकर्षते जलम् ॥
तयोर्युद्धं महाघोरं दिव्यवर्षसहस्रकम् ॥
वारुणैः संयतः पाशैर्निष्प्रयत्नगतिः कृतः ४९
वेष्ट्यमानः स घोरैस्तु पाशैर्नागो दृढैस्तथा ॥
विस्फूर्जितमहाशक्तिर्विक्रोशंश्च महारवान् ॥
व्यथितः स निरुत्साहो गृहीतो घोरकर्मणा ॥
परमापदमापन्नो मनसाचिंतयद्धरिम् ॥५१॥

स तु नागवरः श्रीमान्नारायणपरायणः ॥

तमेव शरणं देवं गतः सर्वात्मना तदा ॥५२॥
एकाग्रो निगृहीतात्मा विशुद्धेनांतरात्मना ॥
नैकजन्मांतराभ्यासाद्भक्तिमान् गरुडध्वजे ॥
नान्यं देवं महादेवात् पूजयामास केशवात् ॥
दिग्बाहुं स्वर्गमूर्धानं भूःपादं गगनोदरम् ॥
आदित्यचंद्रनयनमनंतं विश्वतोमुखम्॥५४॥
भूतात्मानं च मेघाभं शंखचक्रगदाधरम् ॥
सहस्रशुभनामानमादिदेवमजं विभुम्॥५५॥

संगृह्य पुष्कराग्रेण कांचनं कमलोत्तमम् ॥
निवेद्य मनसा ध्यात्वा पूजां कृत्वा जनार्दने ॥
आपद्विमोक्षमन्विच्छन् गजः स्तोत्रमुदीरयत्

गजेंद्र उवाच ॥

नमो मूलप्रकृतये अजिताय महात्मने ॥
अनाश्रयाय देवाय निःस्पृहाय नमो नमः ॥
नम आद्याय बीजाय आर्षेयाय प्रवर्तिने ॥
अनंताय च नैकाय अव्यक्ताय नमो नमः ॥
नमो गुह्याय गूढाय गुणाय गुणधर्मिणे ॥

अतर्क्यायाप्रमेयाय अतुलाय नमो नमः ६०
नमः शिवाय शांताय निश्चयाय यशस्विने ॥
सनातनाय पूर्वाय पुराणाय नमो नमः ॥६१॥
नमो जगत्प्रतिष्ठाय गोविंदाय नमो नमः
नमो देवाधिदेवाय स्वभावाय नमो नमः ॥
नमोऽस्तु पद्मनाभाय सांख्ययोगोद्भवाय च ॥
विश्वेश्वराय देवाय शिवाय हरये नमः ॥६३॥
नमोऽस्तु तस्मै देवाय निर्गुणाय गुणात्मने ॥
नारायणाय देवाय देवानांपतये नमः ॥६४॥

नमो नमः कारणवामनाय
नारायणायामितविक्रमाय ॥
श्रीशार्ङ्गचक्रासिगदाधराय
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ ६५ ॥
गुह्याय वेदनिलयाय महोदराय
सिंहाय दैत्यनिधनाय चतुर्भुजाय ॥
ब्रह्मेंद्ररुद्रमुनिचारणसंस्तुताय
देवोत्तमाय वरदाय नमोऽच्युताय ॥६६॥
नागेंद्रभोगशयनासनसुप्रियाय

गोक्षीरहेममुकनीलघनोपमाय ॥

पीतांबराय मधुकैटभनाशनाय
विश्वाय चारुमुकुटाय नमोऽक्षराय ॥६७॥
नाभिप्रजातकमलासनसंस्तुताय
क्षीरोदकार्णवनिकेतयशोधराय ॥
नानाविचित्रमुकुटांगदभूषणाय
योगेश्वराय विजराय नमो वराय ॥ ६८ ॥
भक्तिप्रियाय वरदीप्तसुदर्शनाय
फुल्लारविंदविपुलायतलोचनाय ॥

देवेंद्रविघ्नशमनोद्यतपौरुषाय
नारायणाय वरदाय नमोऽच्युताय ॥६९॥
नारायणाय परलोकपरायणाय
कालाय कालकमलायतलोचनाय ॥
रामाय रावणविनाशकृतोद्यमाय
धीराय धीरतिलकाय नमो वराय ॥७०॥
पद्मासनाय मणिकुंडलभूषणाय
कंसांतकाय शिशुपालविनाशनाय ॥
गोवर्धनाय सुरशत्रुनिकृंतनाय

दामोदराय विरजाय नमो वराय ॥७१॥

ब्रह्मायनाय त्रिदशायनाय
लोकैकनाथाय हितात्मकाय ॥
नारायणायार्तिविनाशनाय
महावराहाय नमस्करोमि ॥ ७२ ॥

कूटस्थमव्यक्तमचिंत्यरूपं
नारायणं कारणमादिदेवम् ॥
युगांतशेषं पुरुषं पुराणं
तं वासुदेवं शरणं प्रपद्ये ॥ ७३ ॥

अदृश्यमच्छेद्यमनंतमव्ययं
महर्षयो ब्रह्ममयं सनातनम् ॥
विदंति यं वै पुरुषं पुरातनं
तं वासुदेवं शरणं प्रपद्ये ॥ ७४ ॥
उत्तिष्ठतस्तस्य जलोरुकुक्षे-
र्महावराहस्य महीं विदार्य ॥
विधुन्वतो वेदमयं शरीरं
लोकांतरस्थं मुनयो गृणंति ॥ ७५ ॥
योगेश्वरं चारुविचित्रमौलिं

ज्ञेयं समस्तं प्रकृतेः परस्थम् ॥
क्षेत्रज्ञमात्मप्रभवं वरेण्यं
तं वासुदेवं शरणं प्रपद्ये ॥ ७६ ॥
कार्यक्रियाकारणमप्रमेयं
हिरण्यबाहुं वरपद्मनाभम् ॥
महाबलं वेदनिधिं सुरोत्तमं
तं वासुदेवं शरणं प्रपद्ये ॥७७॥
किरीटकेयूरमहार्हनिष्कै-
र्मण्युत्तमालंकृतसर्वगात्रम् ॥

पीतांबरं कांचनचित्रनद्ध-
मालाधरं केशवमभ्युपैमि ॥ ७८ ॥
भवोद्भवं वेदविदां वरिष्ठं
योगात्मकं सांख्यविदां वरिष्ठम् ॥
आदित्यचंद्राग्निवसुप्रभावं
प्रभुं प्रपद्येऽच्युतमात्मवंतम् ॥ ७९ ॥
यदक्षरं ब्रह्म वदंति सर्वगं
निशम्य यन्मृत्युमुखात्प्रमुच्यते ॥
तमीश्वरं युक्तमनुत्तमैर्गुणैः

सनातनं लोकगुरुं नमामि ॥ ८० ॥
नमस्तस्मै वराहाय लीलयोद्धरते महीम् ॥
खुरमध्यगतो यस्य मेरुः खुरखुरायते ॥८१॥
श्रीवत्सांकं महादेवं देवगुह्यमनूपमम् ॥
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ॥८२॥
प्रभवं सर्वभूतानां निर्गुणं परमेश्वरम् ॥
प्रपद्ये मुक्तसंगानां यतीनां परमां गतिम् ८३
प्रभवं तं गुणाध्यक्षमक्षरं परमं पदम् ॥
शरण्यं शरणार्तानां प्रपद्ये भक्तवत्सलम् ८४

त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् ॥
योगात्मानं महात्मानं प्रपद्येऽहं जनार्दनम् ॥
आदिदेवमजं विष्णुं व्यक्ताव्यक्तं सनातनम् ॥
नारायणमणीयांसं प्रपद्ये ब्राह्मणप्रियं ॥८६॥
अकूपाराय देवाय नमः सर्वमहाद्युते ॥
प्रपद्ये देवदेवेशमणीयांसमणोः सदा ॥८७॥
एकाय लोकनाथाय परतः परमात्मने ॥
नमः सहस्रशिरसे अनंताय नमोनमः ॥८८॥
तमेव परमं देवमृषयो वेदपारगाः ॥

कीर्तयंति च सर्वे वै ब्रह्मादीनां परायणम् ॥
नमस्ते पुंडरीकाक्ष भक्तानामभयंकर ॥
सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम्॥
तावद्भवति मे दुःखं चिंता संसारसागरे ॥
यावत्कमलपत्राक्षं न स्मरामि जनार्दनम् ॥

भीष्म उवाच ॥

भक्तिं तस्य तु संचिंत्य नागस्यामोघसंस्तवात्॥
प्रीतिमानभवद्राजन्श्रुत्वा चक्रगदाधरः ॥९२
आरुह्य गरुडं विष्णुराजगाम सुरोत्तमः ॥
सांनिध्यं कल्पयामास तस्मिन्सरसि लोकधृक्

ग्राहग्रस्तं गजेंद्रं च तं ग्राहं च जलाशयात् ॥
उज्जहाराप्रमेयात्मा तरसा मधुसूदनः ॥१४॥
जलस्थं दारयामास ग्राहं चक्रेण माधवः ॥
मोचयामास नागेंद्रं पाशेभ्यः शरणागतम् ॥
सहि देवलशापेन हूहूर्गंधर्वसत्तमः ॥
ग्राहत्वमगमत्कृष्णाद्वधं प्राप्य दिवं गतः ॥

युधिष्ठिर उवाच ॥

कथं शापोऽभवत्तावद्गंधर्वस्य महात्मनः ॥
एतदिच्छाम्यहं श्रोतुं विस्तरेण पितामह १७

भीष्म उवाच ॥

इदमप्यपरं गुह्यं राजन्पुण्यतमं शृणु ॥
यथा तौ शापितौ तेन देवलेन महात्मना ॥
हाहाहूहूरिति ख्यातौ गीतवाद्यविशारदौ ९८
उर्वशी मेनका रंभा तथान्ये चाप्सरोगणाः ॥
शक्रस्य पुरतो राजन् नृत्यंते ताः सुमध्यमाः ॥
ततस्तु तौ गायमानौ गंधर्वौ राजसद्मनि ॥
अन्योन्यं कुरुतः स्पर्धां शक्रस्य पुरतः स्थितौ॥
आवयोरुभयोर्मध्ये यः श्रेष्ठो गीतवाद्ययोः ॥
तं वदस्व सुरश्रेष्ठ ज्ञात्वा गीतस्य लक्षणम् ॥१॥

गंधर्वयोर्वचः श्रुत्वा प्रत्युवाच शतक्रतुः ॥
युवयोर्गीतवाद्येषु विशेषो नोपलभ्यते ॥ २ ॥
एक एव मुनिश्रेष्ठो देवलो नाम नामतः ॥
युवयोः संशयच्छेत्ता भविष्यति न संशयः ३
ततस्तु तौ शक्रवचो निशम्य
प्रणम्य राजन् शिरसा सुरोत्तमम् ॥
गतौ सुहृष्टौ जयकांक्षिणौ तौ
यत्राश्रमे तिष्ठति स द्विजाग्र्यः ॥ ४ ॥
ततो दृष्ट्वा मुनिश्रेष्ठं देवलं संशितव्रतम् ॥

अभिवाद्य महात्मानमूचतुः पार्श्वतः स्थितौ ॥
शक्रेण प्रेषितौ देव त्वत्समीपे द्विजोत्तम ॥
एकस्य नौ जयं देहि यत्ते मनसि रोचते॥६॥
पृथक् चरंतौ गायंतौ रुचिरं मधुराक्षरम् ॥
न किंचिद्वदते वाक्यं मुनिर्मौनस्य धारणात् ॥
शृण्वन्नपि पदं तेषां न किंचिद्वदते मुनिः ॥
तदा तौ कुपितौ तस्य देवलस्य महात्मनः॥८॥
ऊचतुश्च रुषा वाक्यं गंधर्वौ कालचोदितौ ॥
मूढोऽयं नाभिजानाति निश्चयं गीतवाद्ययोः॥

मदान्वितं निशम्यैतद्वचो गंधर्वयोस्तयोः ॥
क्रोधादुत्थाय विप्रेंद्र इदं वचनमब्रवीत् ॥१०॥
एष हूहूर्दुरात्मा तु ग्राहत्वं यातु मूढधीः ॥
त्वमेव गजराजस्तु भवस्व गिरिगह्वरे ॥
एवं शापं ददौ क्रुद्धो देवलः सुमहातपाः॥११॥
ततस्तौ शापितौ तेन देवलेन महात्मना ॥
प्रणम्य शिरसा विप्रं गंधर्वाविदमूचतुः॥१२॥
भूमंडलगतौ ह्यावां प्रसादं कुरु सुव्रत ॥
निश्चयं वद विप्रेंद्र येन शापाद्विमुच्यतः॥१३॥

T. ततस्तौ पुरुषौ दृष्ट्वा उभौ शापभयार्दितौ ॥ मो.
१७ प्रत्युवाच मुनिश्रेष्ठः स गंधर्वभयापहम् ॥१४॥
मेरुपृष्ठे सरो रम्यं बहुवृक्षसमाकुलम् ॥
नानापक्षिगणाढ्यं च द्वितीय इव सागरः १५
तस्मिन् सरोवरे रम्ये ग्राहो नित्यं भविष्यसि॥
तृषार्तस्तत्र मातंगो गमिष्यति नगोत्तमात् ॥
तयोर्मध्ये महद्युद्धं भविष्यति सुदारुणम् ॥
ग्राहेणाकृष्यमाणस्तु गजः स्तोत्रं करिष्यति ॥ १७
तदैव देवदेवेशस्तुष्यते नात्र संशयः ॥ १८ ॥

ततो नारायणः प्रीतः शापाद्वां मोचयिष्यति॥
इत्युक्त्वा ऋषिणा तेन वरेणैतौ प्रमोदितौ ॥
ग्राहत्वमगमत्सोऽथ वधं प्राप्य दिवं गतः ॥
गजोपि मुक्ततां यातः श्रीकृष्णेन विमोक्षितः ॥
तौ च स्वं स्वं वपुः प्राप्य प्रणिपत्य जनार्दनम् ॥
गजो गंधर्वराजश्च परां निर्वृतिमागतौ ॥२१॥
प्रीतिमान् पुंडरीकाक्षः शरणागतवत्सलः ॥
अभवद्देवदेवेशस्ताभ्यां चैव प्रपूजितः ॥
भजंतं गजराजानमवदन्मधुसूदनः ॥ २२ ॥

श्रीभगवानुवाच ॥

ये मां त्वां च सरश्चैव ग्राहस्य च विदारणम् ॥
गुल्मकीचकवेणूनां तं च शैलवरं तथा ॥ २३ ॥
प्रभासं भास्करं गंगां नैमिषारण्यपुष्करम् ॥
प्रयागं ब्रह्मतीर्थं च दंडकारण्यमेव च ॥ २४ ॥
ये स्मरिष्यंति मनुजाः प्रयताः स्थिरबुद्धयः ॥
दुःस्वप्नो नश्यते तेषां सुस्वप्नश्च भविष्यति ॥
अनिरुद्धं गजं ग्राहं वासुदेवं महाद्युतिम् ॥
संकर्षणं महात्मानं प्रद्युम्नं च तथैव च ॥ २६ ॥
मत्स्यं कूर्मं वराहं च वामनं तार्क्ष्यमेव च ॥

नारसिंहं च नागेंद्रं सृष्टिप्रलयकारकम् ॥२७॥
विश्वरूपं हृषीकेशं गोविंदं मधुसूदनम् ॥
सहस्राक्षं चतुर्बाहुं मुरारिं गरुडध्वजम् ॥२८॥
त्रिदशं त्वादितिं देवं दृढभक्तिमनुत्तमम् ॥
वैकुंठं दुष्टदमनं मुक्तिदं मधुसूदनम् ॥ २९ ॥
एतानि प्रातरुत्थाय संस्मरिष्यंति ये नराः ॥
सर्वपापैः प्रमुच्यंते विष्णुलोकमवाप्नुयुः १३०

भीष्म उवाच ॥

एवमुक्त्वा महाराज गजेंद्रं मधुसूदनः ॥
स्पर्शयामास हस्तेन गजं तं नक्रमेव च॥३१॥

Funding: Tattva Heritage Foundation Kolkata. Digitization: eGangotri

तौ च स्पृष्टौ ततः सद्यो दिव्यमाल्यांबरावुभौ॥
तमेव मनसा प्राप्य जग्मतुस्त्रिदशालयम् ३२
ततो दिव्यवपुर्भूत्वा हस्तिराट् परमं पदम् ॥
गच्छति स्म महाबाहो नारायणपरायणः ३३
ततो नारायणः श्रीमान्मोचयित्वा गजोत्तमम्
ऋषिभिः स्तूयमानोऽग्र्यैर्वेदगुह्यपराक्षरैः ॥३४॥
ततः स भगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः ॥
शंखचक्रगदापाणिरंतर्धानं समाविशत्॥३५॥

वैशंपायन उवाच ॥

गजेंद्रमोक्षणं श्रुत्वा कुंतीपुत्रो युधिष्ठिरः ॥

भ्रातृभिः सहितः सम्यक् ब्राह्मणैर्वेदपारगैः ॥
पूजयामास देवेशं पार्श्वस्थं मधुसूदनम् ॥३६॥
विस्मयोत्फुल्लनयनाः श्रुत्वा नागस्य मोक्षणम्
ऋषयश्च महाभागाः सर्वे प्रांजलयः स्थिताः ॥

अजं वरेण्यं वरपद्मनाभं
महाबलं वेदनिधिं सुरोत्तमम् ॥
तं वेदगुह्यं पुरुषं पुराणं
ववंदिरे वेदविदां वरिष्ठम् ॥ ३८ ॥

एतत्पुण्यं महाबाहो नराणां पुण्यकर्मणाम् ॥

दुःस्वप्नदर्शने घोरे श्रुत्वा पापैः प्रमुच्यते ३९
तस्मात्त्वं हि महाराज प्रपद्य शरणं हरिम् ॥
विमुक्तः सर्वपापेभ्यः प्राप्स्यसे परमं पदम् ४०
यदा महाग्राहगृहीतकातरं सुपुष्पिते पद्मवने
महाद्विपम् ॥ विमोक्षयामास गजं जनार्दनो
दुःस्वप्ननाशं च सुखोदयं सदा ॥४१॥ परं परा-
णां परमं पवित्रं परेशमीशं सुरलोकनाथम् ॥
सुरासुरैरर्चितपादपद्मं सनातनं लोकगुरुं न-
मामि ॥४२॥ वरगजशरणाद्विमुक्तिहेतुं पुरुष-

वरं स्तुतिर्दिव्यदेहगीतम् ॥ सततमपि पठंति
ये तु तेषामभिहितमंतरकिल्बिषापहं स्यात् ॥
दृढबद्धधर्ममूलो वेदस्कंधः पुराणशाखाढ्यः॥
ऋतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥
जगद्धिताय कृष्णाय गोविंदाय नमो नमः ४५
आकाशात्पतितं तोयं यथा गच्छति सागरम्
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥४६॥
वेदे रामायणे चैव पुराणे भारते तथा ॥

आदौ मध्ये तथा चांते हरिः सर्वत्र गीयते ॥
सर्वरत्नमयो मेरुः सर्वाश्चर्यमयं नभः ॥
सर्वतीर्थमयी गंगा सर्वदेवमयो हरिः ॥४८॥
गीता सहस्रनामैव स्तवराजो ह्यनुस्मृतिः ॥
गजेंद्रमोक्षणं चैव पंचरत्नानि भारते ॥४९॥

इति श्रीम० शतसाहस्र्यां सं० शांतिपर्वणि भीष्मयुधिष्ठिरसंवादे गजेंद्रमोक्षः समाप्तः ॥

---

इदं पुस्तकं "निर्णयसागराख्य" मुद्रणालये तदधिपतिना पांडुरंग जावजी इत्यनेन मुद्रयित्वा प्रकाशितम् । शकाब्दः १८४४ सनाब्दः १९२२.

पब्लिशर—पांडुरंग जावजी, प्रिन्टर—रामचंद्र येसू शेडगे. } नं० २३ कोलभाट लेन. निर्णयसागर प्रेस, मुंबई.

